कोमुइवारं-कौमुदीवासरम् । आव० ८१६ ।
कोमुई-कौमुदी । ओघ० ६७ । कौमुदी-कार्त्तिकी पौर्णिमा । जं० प्र० ११५ ।
कोमुतिआ-कौमुदीकी-वासुदेवस्य देवतापरिगृहीता गोशीर्षचन्दनमयी तृतीया भेरी । आव० ६७ ।
कोमुदि-कौमुदी-कार्त्तिकी । प्रश्न० ८४ ।
कोमुदिका-वासुदेवस्य गोशीर्षश्रीखण्डमयी देवतापरिगृहीता तृतीया भेरी । विशे० ६१६ ।
कोमुदित-उत्सववाद्यम् । ज्ञाता० १०० ।
कोमुदियचारो-कौमुदीमह । आव० ५६० ।
कोमुदी-कौमुदी । आव० ३५५ ।
कोमुदीनिसा-कौमुदीनिशा, कार्त्तिकपौर्णमासी । ज्ञाता० ३५ ।
कोयव-रूतपूरित पट, या लोके 'माणिकी' इति प्रसिद्धा । बृ० द्वि० २२० अ । कुतुप । ठाणा० २३४ ।
कोयवगो-वरको । नि० चू० द्वि० ६१ अ । रूतपूरितपट । ज्ञाता० २३२ ।
कोयवाणि-वस्त्रविशेष । आचा० ३९३ ।
कोयवि-कौतवी-दुःप्रतिलेखितदूष्यपञ्चके द्वितीयो भेद । आव० ६५२ ।
कोरग-कोरङ्क-पक्षिविशेष । प्रश्न० ८ ।
कोरट-कोरण्टक-पुष्पजातिविशेष । जं० प्र० ३४ ।
कोरटक-अग्रबीज । दश० १९३ । गुल्मविशेष । आचा० ३० । स्थलजम् । प्रज्ञा० ३० । कोरण्टक, पुष्पजातिविशेष । जीवा० १९१ ।
कोरटग-कोरण्टक-भरुकच्छे उद्यानम् । व्य० प्र० १७३ आ ।
कोरंटय-गुल्मविशेष । प्रज्ञा० ३२ ।
कोरटयगुम्मा-कोरण्टकगुल्मा । जं० प्र० ९८ ।
कोरटयधाऊ-पीतवर्ण । ( दे० ) ।
कोरव-कोरक-मुकुलम् । ठाणा० १८५ । ज०प्र० ५२८ ।
कोरव्व-कौरव्य-कौरव्यगोत्र । जीवा० १२१ । कुलविशेष । आव० १७९ । कुरव-कुरूवंशप्रसूता । औप० २७ । कुरव-आर्यभेद । ठाणा० ३५८ । कुरव । भग० ४८९ । कुलार्यभेदविशेष । प्रज्ञा० ५६ ।
कोरव्वीया- । ठाणा० ३६३ ।
कोरिंट-कोरिण्ट-कुसुमविशेष । भग० ३१८ । कोरण्टक-पुष्पजाति । ज्ञाता० २३ ।
कोरिंटक-अग्रबीजा । ठाणा० १८६ ।
कोरिंटमल्लदामं-कोरण्टकमाल्यदाम । प्रज्ञा० ३६१ ।
कोलबए-कोलम्ब-शाखिशाखानामवनतमग्र भाजन वा । अनुत्त० ५ ।
कोलंबो-कोलम्ब-प्रान्त । विपा० ५५ ।
कोल-कोल-घुण । आव० ६५६ । दश० १५५ । शूकर । ज्ञाता० ७० । बृ० प्र० १४८ अ । बदर । दश० चू० ८० । पिण्ड० १६१ । दश० १७६, १८५ । बदरचूर्णम् । बृ० प्र० २६८ अ । उन्दराकृतिर्जन्तुविशेष । प्रश्न० ७ । क्रोड-शूकर । प्रश्न० ■ । कुवल-बदरम् । भग० २९८ ।
कोलघरियाओ-कुलगृहात्-पितृगृहादागता कौलगृहिका । उपा० ४८ ।
कोलगिणी-कोलिकी । आव० ४२१ ।
कोलचुण्ण-बदरचुर्ण । दश० चू० ८० । बदरसक्तुद । दश० १७६ ।
कोलजुत्तो-कुलोचित्य । व्य० प्र० २२४ अ ।
कोलट्ठिय-कुवलास्थिकम्-बदरकुलक । भग० २८५ ।
कोलपाणग-पानकविशेष । आचा० ३४७ ।
कोलपाले-धरणेन्द्रस्य द्वितीयलोकपाल । ठाणा० १९७ ।
कोलव-कौलव-तृतीय करणम् । जं० प्र० ४९३ ।
कोलवाल-दवरकम् । आव० ४२७ ।
कोलवासंसि-कोला-घुणा तेषामावास । सम० ३९ ।
कोलसुणए-कोलशुनक-मृगयाकुशल श्वा । प्रज्ञा०२५४ । सूकरस्वरूपधारी । उत्त० ४६० ।
कोलसुणक-कोलश्वान-महासूकर । प्रश्न० ७ ।
कोलसुणग-मनस्खपदचतुष्पदविशेष । प्रज्ञा० ४५ । कोलशुनका-महाशूकरा । जं० प्र० १२४ । पाटयित्वा भक्षणम् । नि० चू० द्वि० १२९ अ ।
कोलसुणय-महासुकर । आचा० ३३८ ।
कोला-घुणा । नि० चू० द्वि० ८३ अ । नि० चू० प्र० २५५ आ । घुणा-तदावासभूते जीवप्रतिष्ठित । आचा०

३३७ ।
**कोलाओ**-कोल । त० ।
**कोलाल**-मृद्भाजनविशेष । आव० ४८४ । कुलाला-कुम्भकारा । उपा० ४२ ।
**कोलालिए**-कोलालानि-मृद्भाण्डानि पण्यमस्येति कौलालिक । अनु० १४६ ।
**कोलालिया**-कर्मार्यभेदविशेष । प्रज्ञा० ५६ । कोलालिका-कुलालक्रयविक्रयिण । बृ० द्वि० १७५ अ ।
**कोलावास**-कोला-घुणकीटकास्तेषामावास । आचा० २९३ । घुणावास । आचा० ४१० । कोला-घुणास्तदावासभूत कोलावास । आचा० ३३७ ।
**कोलाहल**-विलपिताऽऽक्रन्दितादिकलकल । उत्त० ३०७ । बहुजनमहाध्वनि । ज्ञाता० २२० । जीवा० १७३ । बोल । प्रश्ना० ६७ । आर्त्तशकुनिसमूहध्वनि । भग० ३०६ । आर्त्तशकुनसमूहध्वनि । जं० प्र० १६७ ।
**कोलाहलभूत**-कोलाहल - विलपिताऽऽक्रन्दितादिकलकल कोलाहल एव कोलाहलक स भूत इति जातो यस्मिस्तत् कोलाहलकभूतम् । उत्त० ३०७ ।
**कोलाहलभूए**-कोलाहल -आर्त्तशकुनिसमूहध्वनिस्त भूत प्राप्त कोलाहलभूत । भग० ३०६ ।
**कोलाहा**-दर्वीकरअहिभेदविशेष । जीवा० ३९ । प्रज्ञा० ४६ ।
**कोलिअतंतुय**-कोलिकतन्तुकम् । ओघ० ११७ ।
**कोलिओ**-कृतिकर्मदृष्टान्ते द्वारिकाया वासुदेवभक्तो वीरकाभिध कोलिक । आव० ५१३ ।
**कोलिकपुडक**-वाद्यविशेष । भग० २१६ ।
**कोलिग**-कोलिक -जीवविशेष । बृ० द्वि० १६४ अ ।
**कोलिगजालग**-कोलिकजालकानि-जालकाकारा कोलिकाना लालातन्तुसन्ताना । बृ० प्र० २७८ अ ।
**कोलिय**-कौलिक -तन्तुवाय । नन्दी० १६५ ।
**कोलियकः**-लूता । ओघ० १२६ ।
**कोलियकण्णा**-कोलिककन्या विषभोजननिवृत्तो दृष्टान्त । आव० ५५६ ।
**कोलियगो**-कोलिक । उत्त० १०० ।
**कोलियापुडिगो**-मङ्कडासाणओ । नि० चू० प्र० २१५ आ ।
**कोलुणं**-कारुण्यम् । नि० चू० द्वि० ५८ आ ।
**कोलेज्जाओ**-अधोवृत्तखाताकाराद् असयत । आचा० ३४४ ।
**कोल्लइर**-सगमस्थविरविहारभूमि । नि० चू० द्वि० ६५ आ । कोल्लकिर-क्रीडनधात्रीदोषविवरणे नगरम् । पिण्ड० १२५ ।
**कोल्लगाणुगो**-जो रयहरणणिसेज्जाए उवग्गाहियपादपुछणे वा ठितो वा एति चिट्ठति वा । नि० चू० तृ० १३७ अ ।
**कोल्लयगामे**-वर्द्धमानजिनस्य प्रथम पारणकस्थानम् । आव० १४६ ।
**कोल्लयर**-कुल्लयर-नगरविशेष । उत्त० १०८ ।
**कोल्लर**-हस्तिन उपरि कोल्लररूपा 'गेल्लि' या मानुष गीलतीव । भग० १८७, ३९९ ।
**कोल्लाए**-सन्निवेश । उपा० २, १४ । सन्निवेश । महावीरस्वामिविहारभूमि । भग० ६६२ ।
**कोल्लाकसन्निवेश**-वर्द्धमानजिनस्य विहारभूमि । आव० २०० ।
**कोल्लाग**-कोल्लाक -सन्निवेश । महावीरस्वामिविहारभूमि । आव० १८८ ।
**कोल्लागसन्निवेस**-कोल्लागसन्निवेश -व्यक्तसुधर्मगणधरयोर्जन्मभूमि । आव० २५५ ।
**कोल्लुकपरंपर**-महाराष्ट्रप्रसिद्धकोल्लुकचक्रपरम्पराय । बृ० प्र० ९० आ ।
**कोल्लुगा**-सिगाला । नि० चू० प्र० १७५ अ ।
**कोरहुक**-दस्युग्रामम् । बृ० द्वि० १९९ आ ।
**कोल्हुगाणुगे**-क्रोष्टुकानुग । आचार्याणां तृतीया उपमा । शिवो तृतीया उपमा । व्य० प्र० १२१ आ ।
**कोव**-कोप -क्रोधोदयात्स्वभावाच्चलनमात्रम् । भग० ५७२।
**कोवघर**-कोपगृहम् । विपा० ८३ ।
**कोवडिओ**-केतराती । दीणारो । नि० चू० प्र० ३३० अ ।
**कोवपिंड**-कोपपिण्ड-कोहप्रसादात् पिंड लभते स कोपपिण्ड । नि० चू० द्वि० १०० अ ।
**कोविए**-कोविद -पण्डित । उत्त० ४८२ । सम्यगात्मपरमार्थ । उत्त० ४१९ ।

**कोविओ**–कोविद –संसारविमुखप्रज्ञतया पण्डित । पिण्ड० ७२ ।
**कोवियप्पा**–कोविदात्मा-कोविद लब्धशास्त्रपरमार्थ आत्मा-ऽस्येति । उत्त० ४२० ।
**कोविया**–खोड़िया–नाशिता । नि० चू० द्वि० १०८ आ ।
**कोवेइ**–कोपयति । विशे० ६५६ ।
**कोशः**–घटस्यादौ आकार । विशे० ६३८ ।
**कोशकं**– । आचा० ३५७ ।
**कोशकारकीटः**– । दश० २७३ ।
**कोशलजनपदः**–कोशलजनपदोऽप्यभिधीयते यत्र अयोध्या नगरीति । ज्ञाता० १२५ । पिण्ड० ६८ ।
**कोशला**–देशविशेष । पिण्ड० ६८ ।
**कोशातकी**–तिक्ततरसपरिणता । प्रज्ञा० १० । वल्ली-विशेष । आचा० ३० ।
**कोशिकारः**–कीटविशेष । आचा० ७१ ।
**कोष्ठक**–श्रावस्तीनगर्यां तैन्दुकोद्याने चैत्य । विशे० ९३५ ।
**कोष्ठ**–लक्षणहीनम् । अनु० १०२ । वाससमुदाय । भग० ७१३ । धान्यपल्य । उत्त० ३५१ ।
**कोष्ठबुद्धिता**–ऋद्धिविशेष । ठाणा० ३३२ ।
**कोसं**–कोष-भाण्डागार चर्मलताद्यनेकवस्तुरूपम् । उत्त० ३१६ ।
**कोस**–सराव । दश० चू० ६६ । जहिं रयणादिय दव्व सो । कोश । नि० चू० प्र० ३४ आ । कोश –आश्रय । प्रश्न० ६४ । समुदायो । नि० चू० द्वि० ६२ आ । क्रोश –गव्यूतम् । उत्त० ६८६ । कोश –वारकादिभाज-नम् । सूत्र० ११८ ।
**कोसंब**–एकास्थिकवृक्षविशेष । भग० ७०५, ८०३ । प्रज्ञा० ३१ ।
**कोसंबगंडिय**–
**कोसंबवण**–कौशाम्बवन–कृष्णस्य कालकरणस्थानम् । अन्त० १६ ।
**कोसंबाहारं**–आर्यसुहस्तिविहारभूमि । द्रमकदीक्षा-स्थानम् । नि० चू० प्र० २४३ अ ।
**कोसंबि**–कौशाम्बी–यमुनातीरे नगरीविशेष । विशे० ४६५ । वर्धमानस्वामिविहारभूमि । भग० ५५६ । आव० २२१ । शतानीकराजधानी । भग० ५५६ । विपा० ६८ । आव० २२२ ।
**कोसंबिय**–कौशाम्बी. अज्ञातोदाहरणेऽजितसेनराजधानी । आव० ६६६ ।
**कोसंबी**–कौशाम्बी–नगरीविशेष । उत्त० २१४, १६३, ३७६ । यज्ञदत्तद्विजस्थानम् । उत्त० १११ । वत्सदेश-राजधानी । बृ० द्वि० १६७ आ । द्रमकप्रव्रज्यास्थानम् । बृ० द्वि० १५३ आ । वर्द्धमानस्वामिपारणकस्थानम् । आव० २२५ । दुर्गन्धायाः उत्पत्तिस्थानम् । उत्त० १२३ । नगरीविशेष । ज्ञाता० २५३ । वत्सजनपदे नगरी । नि० चू० तृ० १६ अ । भग० ५५६ । नगरीविशेष । उत्त० ४४ । दश० ४६ । तापसश्रेष्ठि-स्थानम् । उत्त० ६६ । वत्सजनपदे आर्यक्षेत्रम् । प्रज्ञा० ५५ । जितशत्रुराजधानी । उत्त० २८६, २८७ । धनपालराजधानी । विपा० ६५ । पद्मप्रभजन्मभूमि । आव० १६० । शिक्षायोगदृष्टान्ते दृष्टोत्पत्तिविषये नगरी । आव० ६७६ । भावप्रतिक्रमणदृष्टान्ते नगरी । आव० ४८५ । अज्ञातोदाहरणेऽजितसेनराजधानी । आव० ७०० । सपद्मस्य उत्पत्तिस्थान । नि० चू० तृ० ४४ आ ।
**कोसंबीओ**–कौशाम्बीत । आव० ६३ ।
**कोसकोट्ठागारकहा**–कोशो-भाण्डागार, कोष्ठागार–धान्या-गार, तत्कथा कोशकोष्ठागारकथा । ठाणा० २१० ।
**कोसकोट्ठारे**–कोशकोष्ठागार, राज कोशकोष्ठागारसम्बन्धी-विचार । राजकथायाश्चतुर्थभेद । आव० ५८१ ।
**कोसग**–कोशक –चर्मपञ्चके चतुर्थो भेद । ठाणा० २३४ । कोश –चर्मपञ्चके चतुर्थो भेद । आव० ६५२ । नख-भगरक्षार्थ चर्मकोश । बृ० द्वि० १०१ अ । अङ्गुलीनाम-ग्रुष्ठस्य वा छादक स कोशक । बृ० द्वि० २२२ आ ।
**कोसय**–कोश । आव० ६२५ ।
**कोसल**–देशविशेष । उत्त० ३७५ । भग० ६८० । कोश-लक–कोशलदेशोत्पन्न । व्य० द्वि० २१६ आ ।
**कसलग**–कोशलक –कोशलदेशीय । पिण्ड० १६७ ।
**कोसलपुरं**–सुमतिनाथजन्मभूमि । आव० १६० ।
**कोसला**–कोशला–अयोध्या, तज्जनपदोऽपि कोशला ।

भग० ३१७ । अयोध्या । जं० प्र० १३६ । कोसला-जनपदविशेष । ज्ञाता० १३० । प्रज्ञा० ५५ । कोशला-अचलगणधरजन्मभूमि । आव० २५५ ।

**कोसलाउरे**-कोशलपुरे-मायोदाहरणे नगर, यत्र पूर्वभवे धनपतिधनापहभार्ये नन्दनेभ्यस्य श्रीमतिकान्तिमतिदुहितरौ जाते । आव० ३६४ ।

**कोसलिए**-कोशलदेशोत्पन्नत्वात् कौशलिक । ठाणा० ३२७ । कोशलायां-अयोध्यायां भव कौशलिकः । जं०प्र० १३६ । कोशलदेशे भव कौशलिक । सम० ६० ।

**कोसलियं**-कौशलिक-देशविशेष । उत्त० ३४४ ।

**कोसा**-कोशा, पाटलिपुत्रे गणिका । आव० ४२५ । वेश्या, यस्या गृहे स्थूलभद्रो द्वादशवर्षं यावत् स्थित । आव० ६६५ ।

**कोसातकी**-तिक्तरसे दृष्टान्त । उत्त० ६७६ ।

**कोसि**-कोशी-प्रतिमा । ज्ञाता० ५७ ।

**कोसिओ**-कौशिकनामा अश्ववणिक् । आव० २२० । कौशिकनामा ब्राह्मणविशेष । आव० १७१ । कौशिक-तापसपुत्र । आव० १७६ ।

**कोसिकारकीड**-कोशिकारकीट-आत्मवेष्टक कीटविशेष । प्रश्न० ६१ ।

**कोसिता**-कौशिका-पट्टलकादय । ठाणा० ३६० ।

**कोसिय**-कौशिक-हस्तगोत्रम् । जं० प्र० ५०० ।

**कोसियगोत्ते**-कौशिकगोत्रम् । सूर्य० १५० ।

**कोसियज्जो**-कौशिकार्य-आर्जवोदाहरणे चम्पायामुपाध्याय । आव० ७०४ ।

**कोसी**-नदीविशेष । ठाणा० ४७७ । कोश-परिवार । सूत्र० २७६ । कोशी-प्रतिमा । उपा० २४ ।

**कोसेज्ज**-कौशेयक-कोशेयककारोद्भव वस्त्रम् । प्रश्न० ७१ । वस्त्रम् । औप० १० । कौशेय-त्रसरितन्तुनिष्पन्नम् । जं० प्र० १०७ । वेडयवारिणो । नि० चू० ४३ आ । वस्त्रविशेष । जं० प्र० २०२ ।

**कोसेयं**-कौसेय-त्रसरितन्तुनिष्पन्न वस्त्रम् । जीवा० २६९ ।

**कोहंडा**-कूष्माण्डा-पुस्फला । अनु० १६२ ।

**कोह**-कारणेऽकारणे वाऽतिक्रूराध्यवसाय क्रोध । आचा० १६१ । तत्रात्मीयोपघातकारिणी क्रोधकर्म्मविपाकोदयात् क्रोध । आचा० १७० । क्रोधन-क्रुध्यति वा येन स क्रोध-क्रोधमोहनीयसम्पाद्यो जीवस्य परिणतिविशेष क्रोधमोहनीयकर्मैव । ठाणा० १९३ । अप्रीतिलक्षण । उत्त० २६१ । क्रोध-अप्रीतिपरिणाम । जीवा० १५ । क्रोध-नोकर्मद्रव्यक्रोध-चर्मकारचर्मकोयो नीलकोथादिश्च । विशे० ११७० । क्रोध । आव० ८४८ । क्रोध-सप्तम उत्पादनदोष । पिण्ड० १२१ । षष्ठ पापस्थानकम् । ज्ञाता० ७५ । कोथ-कुथितत्व शटित वा । भग० १९८ ।

**कोहणिस्सिया**-क्रोधनि सृता-क्रोधान्नि सृता, क्रोधाद्विनिर्गतेति । प्रज्ञा० २५६ ।

**कोहण**-क्रोधन-सकृत् क्रुद्धोऽयं तक्रुद्धो भवति । नवमसमाधिस्थानम् । सम० ३७ । क्रोधन-य सकृत्क्रुद्धोऽत्यन्तक्रुद्धो वा भवेत् । नवममसमाधिस्थानम् । आव० ६५३ ।

**कोहनिस्सिया**-क्रोधनिसृता-मृषाभाषाभेद । दश० २०१ ।

**कोहविवेग**-क्रोधविवेक-कोपत्याग, तस्य दुरन्ततादिपरिभावतेनोदयनिरोध । भग० ७२७ ।

**कोहसन्ना**-क्रोधोदयात्तदावेशगर्भा प्ररूक्षनयनदन्तच्छदस्फुरणादिचेष्टैव सज्ञायतेऽनयेति क्रोधसज्ञा । भग० ३१४ । क्रोधवेदनीयोदयात्तदावेशगर्भा पुरुषमुखवदनदन्तच्छदस्फुरणचेष्टा क्रोधसज्ञा । प्रज्ञा० २२२ ।

**कोहा**-क्रोधा-क्रोधानुगता । आव० ५४८ ।

**कोहाड**-प्रहरणविशेष । नि० चू० द्वि० ३१ आ ।

**कोहंडियाकुसुमेइ**-कूष्माण्डिकाकुसुम-पुस्फलीपुष्प । जं० प्र० ३४ ।

**कोहिल्लो**- । ओघ० ९८ ।

**कोहेतु**-को हेतु-का उपपत्ति । सूर्य० २२ । किं कारणम् । सूर्य० १३ ।

**कौकुच्यं**-दुष्टकायप्रचारसयुक्त हास्य असभ्यो वाक्प्रयोगश्च । ( त० ७-२७ ) ।

**कौटलं**-अर्थशास्त्रम् । ज्योतिष निमित्त वा । ओघ० १४९ ।

**कौटिल्यं**-मायी । दश० २५४ ।

**कौटुंबिक**-कर्षक ।

कौतुकं–मुखकरण, यन्धरक्षादिबन्धन, एतत् सर्वमपि कौतुकमुच्यते । वृ० प्र० २१५ अ ।
कौतुका– । भग० २३ ।
कौमोदकी–वासुदेवस्य गदा । उत्त० ३५० । गदाविशेष । प्रश्न० ७७ । गदा, लकुटविशेष । सम० १५७ ।
कौलिक–कोकिलजातीय पुरुषविशेष । नदी० १५५ ।
कौलिकी–कोकिलजातीया-भ्रामरम्, उत्पातिकी बुद्धे-दृष्टान्त. । नदी० १५५ ।
कौशलिरतया– । ठाणा० ४०१ ।
कौशाम्बकानने–वनविशेष । ठाणा० ४३३ ।
कौशिक– । दश० २१३ । दश० २१२ ।
कौशेयवानि–वस्त्रविशेषभूतानि । सम० १५८ ।
कौसुम–रागविशेष । रञ्जनविशेष । जं० प्र० १८८ ।
क्रलियं–स्खलितम् । विशे० ४०६ ।
क्लाय–ख्यात, कथित, प्रसिद्धम् । प्रज्ञा० ६८ ।
क्रतु–सयूपो यज्ञ एव । विशे० ७८५ ।
क्रम–गति, प्रवृत्ति । विशे० २२० ।
क्रमभङ्ग–यथैको जीव एव एवाजीवेत्यादि । आव० ५६६ ।
क्रमभङ्गका–भङ्गस्य द्वितीयभेद । ठाणा० ४७८ ।
क्रयाणक–द्रव्यसमूह । नदी० १५० ।
क्राथचव्यवहार–क्रथेन वाक्यस्य तद्विषय सङ्ख्यान कल्प एव यत्पाटय क्राथचव्यवहार । ठाणा० ४६७ ।
क्रियानय.–नयविशेष । दश० ८० ।
क्रियाविशालं–कायिक्यादिक्रियाविशाल सयमक्रियाविशाल च । नदी० २४१ ।
क्रियासिद्धि.–इहैव मोक्षावाप्तिलक्षणा । आचा० ४१६ ।
क्रीडारथ–क्रीडार्थं रथ । रथस्य प्रथमो भेद । जीवा० १८६ ।
क्रीत–साध्वकल्यमशनादि । दश० २०३ । प्रश्न० १४४ ।
क्रूरच्छाणि– । नि० चू० प्र० ३२३ अ ।
क्रूराणि–क्रूराणि, निर्दयानि निरनुक्रोशानि । नि० चू० प्र० १६६ ।
क्रोधकारण–गर्व । आचा० १६४ ।
क्रोधनत्वं–अत्यन्तक्रोधनत्वम् । नवममसमाधिस्थानम् । प्रश्न० १४४ ।
क्रोधादिपिण्ड.–क्रोधमानमायालोभैरवाप्त क्रोधादिपिण्ड । आचा० ३११ ।
क्रोधादिमानं–क्रोधादीनां मानम् । आचा० १६४ ।
क्रौंचारि.–कार्त्तिकेय । आचा० २६ ।
क्रौष्टुकि–श्रीकृष्णस्य नैमित्तिक । उत्त० ४६० ।
क्वणितं–शब्दितम् । आव० ६४६ ।
क्वणिता–वाद्यविशेषा । जीवा० २६६ ।
क्वथितं–प्रधानम् । जीवा० २६८ ।
क्वथितोदक–उष्णोदकम् । दश० २२८ ।
क्वाथं–राणितम् । प्रज्ञा० ३६४ ।

## क्ष

क्षणक्षयिभावप्ररूपकः–सामुच्छेद । आव० ३११ ।
क्षणमात्र–पलमात्रम् । नदी० १५५ ।
क्षणिक– । ओघ० ७२ ।
क्षणीभूत–स्तिमितम् । ओघ० १८४ ।
क्षपकर्षि:–भिक्षुविशेष । उत्त० ४१८ ।
क्षपणं–अनारोपणम, अन्ये त्वनु भैक्षिकातिरिक्तधान्यस्येर भाटनमित्यथ । ठाणा० ३२६ ।
क्षपणोपसम्पत्–चारित्रनिमित्त कश्चित्क्षपणार्थम् । आव० २७१ ।
क्षयनिष्पन्न–तत्फलरूपो विचित्र आत्मपरिणाम, केवल-ज्ञानदर्शनचारित्रादि । ठाणा० ३७८ ।
क्षयोपशम–अद्धविध्यानानलोपमतमसमता नीतम् । आव० ७६ ।
क्षान्त–क्षामितसमस्तप्राणिगण । आचा० २६१ ।
क्षात्रखानक–सन्धिच्छेदक । प्रश्न० ४६ ।
क्षारोदका–आमलकोदका । पिण्ड० ६५ ।
क्षाल–निर्द्धमन । ठाणा० २६४ ।
क्षीरं– । जीवा० १६१ ।
क्षीरकाकोली–साधारणवनस्पतिविशेष । आचा० ५७ ।
क्षीरपूरम्– । जीवा० १६१ ।
क्षीरबिडोलिका–साधारणवनस्पतिकायिकभेद । जीवा० २७ ।

खंडना–विराधना । प्रश्न० ७ ।
खंडपट्टे–गण्डपट्ट –धूर्त्त । विपा० ७२ । खण्ड–अपरिपूर्ण पट्ट परिधानपट्टो यस्य मद्यद्यूतादिव्यसनाभिभूततया परिपूर्णपरिधानाप्राप्ते ते खण्डपट्टा –द्यूतकारादय, अन्यायव्यवहारिण, धूर्त्ता वा । विपा० ५६ ।
खंडपाडिय–खण्डपाटित । विपा० ५६ ।
खंडप्पवायगुहाकूड–खण्डप्रपातगुहाधिपदेवनिवासभूत कूट खण्डप्रपातगुहाकूटम् । जं० प्र० ७७ ।
खंडप्रपाता–गुहाविशेष । ठाणा० ७१ ।
खंडभेद –क्षिप्तमृत्पिण्डस्येव । ठाणा० ४७५ ।
खंडभेय–खण्डभेद –लोष्ठादेरिव य खण्डशो भवति । भग० २२४ ।
खंडरक्ख–खण्डरक्ष –दण्डपाशिक । राय० २ । खण्डरक्ष । उत्त० १६५ । दण्डपाशिक शुल्कपालो वा । औप० २ । श्रमणोपासकविशेष । आव० ३१७ । शुल्कपाल । प्रश्न० ३० । शुल्कपाल कोट्टपालो वा । प्रश्न० ४६ ।
खंडरक्खा–खण्डरक्षा –राजगृहे श्रावकविशेषा । विशे० ६६१ । दण्डपाशिका शुल्कपाला वा । ज्ञाता० २ । दण्डपाशिका । ज्ञाता० २३६ । हिंडिका । बृ० द्वि० १८० आ ।
खंडलक– । औप० १८७ ।
खंडशर्करा–मत्स्यण्डी । जं० प्र० १०५ । प्रज्ञा० ३६६ । जीवा० २६८ ।
खंडाखंडिकतो–खण्डखण्डीकृत । आव० ६३ ।
खंडाखंडेहिं–खण्डश । आव० ३७० ।
खंडाभेद–खण्डभेद । लोहखण्डादिवत् । प्रज्ञा० २६७ ।
खंडिअ–खण्डितम् । देशतो भग्नम् । आव० ५७२ । आव० ७७८ ।
खंडिए–खण्डिक–छात्र । उत्त० ३६४ ।
खंडिओ–छात्र । आव० ५६१ ।
खंडितए–खण्डयितु –देशत भङ्क्तुम् । ज्ञाता० १३६ ।
खंडिय–खण्डित–दण्ड इव विभागेन छिन्नम् । प्रश्न० १३४ । खण्डिक –छात्र । आव० २४६ । उत्त० ३६७ । विशे० ६८६ ।
खंडी–मण्डि –अपद्वारम् । विपा० ५६ ।
खंडीओ–प्राकारच्छिद्ररूपा । ज्ञाता० ८१ ।
खंत–पिता । बृ० तृ० ३२ आ । पिण्ड० १२७ । क्षमोपेत क्षान्त । सूत्र० २६८ । वृद्ध । उत्त० १२८ । आव० ३६६ । दश० ८६ । पिता । आव० ३०४ ।
खंतपुत्तो–वृद्धपुत्र । आचा० ६४ ।
खंति–क्रोधनिग्रह । ज्ञाता० ७ ।
खंतिक्खमे–क्षान्त्या क्षमते न त्वसमर्थतया योऽसौ क्षान्तिक्षम –अनगार । भग० १२२ ।
खंतिखमाते–क्रोधनिग्रहेण क्षमा–मर्षणं न त्वशक्तयेति क्षान्तिक्षमा । ठाणा० १४६ ।
खंतिया–जननी । ओघ० १६३ । पिण्ड० १२६, १२७ ।
खंतिसुद्धि–क्षान्ति –क्षमा शुद्धि –आशयविशुद्धता, क्षान्ते शुद्धि –निर्मलता क्षान्तिशुद्धि । उत्त० ५८ ।
खंती–क्षान्ति –क्रोधनिग्रह तज्जन्यत्वादहिंसापि क्षान्ति । अहिंसायास्त्रयोदश नाम । प्रश्न० ६६ ।
खंतेण–पितरि गर्हिते । नि० चू० प्र० १७६ अ ।
खंद–स्कन्द –कार्तिकेय । भग० १६४ । जं० प्र० १२३ । ज्ञाता० ४६, १३६ । जीवा० २८१ । पालकस्य ग्रामकूटपुत्र । आव० २०१ ।
खंदए–स्कन्दक श्रावस्तीनगर्यां कात्यायनगोत्रो गर्दभालिशिष्य स्कन्दक परिव्राजक । भग० ११२, १२४ । स्कन्दक –स्कन्दकमन्त्र्युद्देशक । भग० २१२ । भग० ३२१, ३२४, ४५६, ५१८, ५२३, ५५२, ५५४, ६२४ । श्रावस्तीनगर्यां जितशत्रो पुत्र । बृ० द्वि १५२ आ । जितशत्रुराजपुत्र । उत्त० ११४ । भगवत्या द्वितीयशत उद्देशक । ज्ञाता० १२४, १६८ ।
खंदगगच्छो–दृष्टान्तविशेष । नि० चू० प्र० ३०३ अ ।
खंदगपडिमा–स्कन्दप्रतिमा । आव० २२१ ।
खंदग्गह–स्कन्दग्रह –उन्मत्तताहेतु । भग० १९७ ।
खंदगो–आयविराहणाए दिट्ठन्तो । नि० चू० तृ० ४४ अ । स्कन्दक । अन्त० १८ । चंपाणाम णगरी, तत्थ खंदगो राया । नि० चू० तृ० ४४ अ ।
खंदमह–स्कन्दस्य कार्तिकेयस्य प्रतिनियतदिवसभावी उत्सव स्कन्दमह । जीवा० २८१ । कार्तिकेयोत्सव । ज्ञाता०

४६ ।

खंदसिरी–स्कन्दश्री –विजयस्य चौरसेनापतेर्भार्या । विपा० ५७ । राजगृहेऽर्जुनकमालाकारस्य भार्या । उत्त० ११२ ।

खंदिल–स्कन्दिल नगरायामाचार्यशिष्य, सद्व्यवहारकाचार्य । व्य० प्र० २५६ आ ।

खंध–स्कन्धोऽचित्तमहास्कन्ध । विशे० २२६ । स्तम्भ । नि० चू० तृ० २१ अ । स्कन्ध । विशे० ४२६ । स्कन्ध –रूपवेदनाविज्ञानसञ्ज्ञासंस्कारारव्य । प्रश्न० ३१ । स्कन्ध –अंशदेश । जं० प्र० ११२ । स्कन्ध –स्थुडम् । राय० ६ । स्थुड । दश० २४७ । औप० ७ । जीवा० १८७ । उत्त० २४ । स्थुड यतो मूलशाखा प्रभवन्ति । जं० प्र० २६ । पागारी पेढ वा, परो मृदिष्टकदारुसंघातो स्कन्ध इत्यर्थ । नि० चू० द्वि० ८४ अ । स्कन्ध –सहतानेकपरमाणुरूप । उत्त० ६७४ ।

खंधकरणी– । नि० चू० प्र० १८० आ । ओघ० २०६ ।

खंधगसीसा–कुम्भकारकट यन्त्रपीलिता । मर० ।

खंधग्गहो–स्कन्धग्रह । जीवा० २८४ ।

खंधदेसा–स्कन्धदेशा । स्कन्धानामेव स्कन्धत्वपरिणाममजहता बुद्धिपरिकल्पिता द्व्यादिप्रदेशात्मका विभागा । जीवा० ७ ।

खंधप्पएसा–स्कन्धप्रदेशा –स्कन्धाना स्कन्धत्वपरिणाममजहता प्रकृष्टा देशा –निर्विभागा भागा परमाणव । जीवा० ७ । स्कन्धाना स्कन्धत्वपरिणामपरिणताना बुद्धिपरिकल्पिता –प्रकृष्टा देशा निर्विभागा भागा परमाणव इत्यर्थ स्कन्धप्रदेशा । प्रज्ञा० १० ।

खंधबीए–स्कन्धबीज सल्लक्यादि । सू० ३५० ।

खंधबीया–निहुगल्लक्यरणिकादय स्कन्धबीजा । आचा० ५७ । स्कन्धबीज शल्लक्यादि । दश० १३६ ।

खंधभूत–स्कन्धभूत–नालकल्पम् । प्रश्न० १३४ ।

खंधवसहो–स्कन्धवृषभ –ककुदधर । आव० ७१६ ।

खंधा–स्कन्ध –थुडम् । राय० ६ । स्कन्दन्ति–शुष्यन्ति धीयन्ते च–पुष्यन्ते पुद्गलाना विचटनेन चटनेन चेति स्कन्धा । प्रज्ञा० ६ । स्कन्धा –स्थुडा । प्रज्ञा० ३१ । द्वीन्द्रियविशेष । प्रज्ञा० ४१ ।

खंधार–स्कन्धावार । विशे० ६७८ । स्कन्धावार सैन्यसन्निवेश । आव० ४२४ । राजबिम्बयुत स्वचक्र परचक्र वा । बृ० द्वि० २७३ आ ।

खंधारमाणं–कलाविशेष । ज्ञाता० ३८ ।

खंधावार–स्कन्धावारम् । आव० २१७ । स्कन्धावार । हस्ती । आव० ६७१ । प्रज्ञा० ३०० । नि० चू० प्र० ३५८ अ । आव० २६६, ५५६ ।

खंभ–स्तम्भ । औत्पातिकीबुद्धौ द्वादशमुदाहरणम् । नदी० १५३ । भग० २३८ । स्तम्भ –कायोत्सर्गस्य विंशती दोषे तृतीयो दोष । आव० ७६८ । सामान्यत । जीवा० १८२ । सुवर्णरूप्यमय फलकम् । जीवा० १८० । औत्पात्तिकी बुद्धौ यस्य दृष्टान्त । आव० ४१६ ।

खंभच्छाया–स्तम्भच्छाया, छायाभेद । सूय० ६५ ।

खंभपुडंतरं–स्तम्भपुटान्तर–द्वौ स्तम्भौ स्तम्भपुट तेषामन्तरम् । जीवा० १८२ । जं० प्र० २५ ।

खंभबाहा–स्तम्भपार्श्वम् । जीवा० १८२ ।

खंभसीस–स्तम्भशीर्षम् । जीवा० १८२ ।

खंभागरिसो–स्तम्भाकर्ष । आव० ४१२ ।

खंभालणं–स्तम्भालगनम् । ।

खंभुग्गया–स्तम्भोद्गता–स्तम्भोपरिवर्तिनी । जं०प्र० ४३ ।

खंभोग्गया–स्तम्भोद्गता–स्तम्भोपरिवर्तिनी । जीवा० १६६ ।

खवियाओ– । नि० चू० प्र० १८५ आ ।

खइअ–खचितानि–विच्छुरितानि । जं०प्र० २७८, ७६ ।

खइए–क्षयाज्जात क्षायिक –अप्रतिघातिज्ञानदर्शनचारित्रलक्षण । सूत्र० २३० । क्षायिक –क्षय कर्मणोऽपगम स एव तेन वा निर्वृत्त । अनु० ११४ ।

खइय–क्षापित–प्रशस्तयोगैर्निर्वाणहुतभुक् तुल्यता नीतम् । आव० ७६ । ख्यातम्–प्रसिद्धम् । आव० ७०० । खादित–भक्षणम् । ठाणा० २७६ ।

खइया–असकृदासेविता । बृ० द्वि० १३ अ ।

खइय–संवेगसूचधर्म्मकथनलक्षण । ठाणा० २७६ ।

खउर–खोरखदिरमादियाण खउरो । नि० चू० तृ० २३ अ । खपुर–चिक्कणद्रव्यम् । बृ० द्वि० २२० आ । कठिनमतिशयेन घनम् । बृ० प्र० ५५ अ । शुष्क । नि० चू० द्वि० ६१ अ ।

**खउरंगे**–व्यासाङ्ग । मर० ।
**खउरपुत्तो**–क्षौरपुत्र । आव० २११ ।
**खउरिता**–खरण्टिता रोमेणेत्यर्थ । रुष्टा । नि० चू० प्र० २०७ अ ।
**खउरियाओ**–कलुषितचेतस कषायेणानालपनम् । बृ० द्वि० २०६ आ ।
**खओ**–क्षय –यथोक्तस्वरूपावारपरिक्षय । जीवा० १८३ ।
**खओवसम**–क्षयोपशम –उदिताना क्षयोऽनुदिताना विष्कम्भितोदयत्वम् । ज्ञाता० ६४ ।
**खओवसमिए**–क्षायोपशमिक –क्रियामात्र क्षयोपशमेन वा निवृत्त । भग० ६४६ । क्षयादुपशमाच्च जात क्षायोपशमिक देशोदयोपशमलक्षण । सूत्र० २३० ।
**खओवसमिया**–तथाऽवधिज्ञानावरणीयस्य कर्मण उदयावलिकाप्रविष्टस्यांशस्य वेदनेन योऽपगम स क्षयोऽनुदयावस्थस्य विपाकोदयविष्कम्भणमुपशम क्षयश्च उपशमश्च क्षयोपशमौ ताभ्या निर्वृत्त क्षायोपशमिक । प्रज्ञा० ५३६ ।
**खक्खरओ**–खर्वरक । आव० ४२४ ।
**खक्खरो**–खर्वर –अश्वोत्त्रासनाय चर्ममयो वस्तुविशेष, स्फुटितवशो वा । विपा० ४७ ।
**खग्ग**–खड्ग शस्त्रविशेष । उत्त० ७११ । आटव्यो जीवस्तस्य विषाण–शृङ्गम् । ठाणा० ४६४ । आयुधम् । भग० ३१८ । खड्ग –एकशृङ्ग आटव्यस्तिर्यग्विशेष । बृ० द्वि० १०६ अ । गण्डीपदचतुष्पदविशेष । जीवा० ३८ । खड्ग –अटव्यश्चतुष्पदविशेष । औप० ५३ । प्रज्ञा० १०० । कायोत्सर्गफले दृष्टान्त । आव० ८०१ । आटव्यश्चतुष्पदविशेष । प्रश्न० १५८ । यस्य पार्श्वयो पक्षवच्चर्माणि लम्बन्ते शृङ्ग चैक शिरसि भवति । प्रश्न० ७ । एगसिंगी अरण्णे भवति । नि० चू० प्र० ४७ आ । आटव्यचतुष्पदविशेष । जीवा० ३८६ । वनजीव । मर० ।
**खग्गथमणं**–खड्गस्तम्भन–कायोत्सर्गफले दृष्टान्त । आव० ७९६ ।
**खग्गपुरा**–सुवल्गुविजये राजधानी । ज० प्र० ३५७ ।
**खग्गपुराओ**–विदेहेषु राजधानीविशेष । ठाणा० ८० ।
**खग्गा**–गण्डीपदविशेष । प्रज्ञा० ४५ ।
**खग्गि**–यस्य गच्छतो द्वयोरपि पार्श्वयोश्चर्माणि लम्बन्ते स जीवविशेष । कोऽपि श्रावक प्रथमयौवनमदमोहितमना धर्ममकृत्वा पञ्चत्वमुपागत खड्ग समुत्पन्न । नदी० १६७ । खड्गि –आरण्यपशुविशेष । ज्ञाता० १०४ ।
**खग्गी**–खड्गी–श्वापदविशेष । आव० ४३७ । आटव्यो जीव । औप० ३५ । विजये राजधानी । ज० प्र० ३४७ ।
**खग्गीतो**–महाविदेहे विजयराजधानी । ठाणा० ८० ।
**खग्गुड**–कुटिल । पिण्ड० १०० ।
**खग्गूडप्राया**–अवसन्ना । ओघ० १५६ ।
**खग्गूडा**–इहालसा स्निग्धमधुराद्याहारलम्पटा खग्गूडा उच्यन्ते । बृ० प्र० २४० अ । अलसा, निर्द्धर्मप्राया । ओघ० ७१, १५३ ।
**खग्गूडो**–निर्धर्मप्राय । ओघ० ४४ ।
**खग्गूडे**–खग्गूडप्राय । ओघ० ७३ ।
**खग्गूडो**–शठप्राय । ओघ० ४४ । निद्रालु । बृ० प्र० २४२ अ ।
**खचित**–परिगत । औप० ११ ।
**खचिय**–खचित–मण्डितम् । ज्ञाता० २७ । भग० ४७७ ।
**खज्ज**–खाद्य–कूरमोदकादि । ज्ञाता० २३ । खाद्यानि–अशोकवर्त्तय । उपा० ५ । प्रश्न० १५३ । खाद्यम् । आव० २०० ।
**खज्जइ**–खाद्यते–भक्ष्यते । आव० ५६६ । खाद्यते खण्डखाद्यादि । उत्त० ३६० ।
**खज्जगं**–खाद्यकम् । निरय० ३४ ।
**खज्जगविही**–खण्डखाद्यादिलक्षणभोजनप्रकार । भग० ६६२ । आव० ३१४ ।
**खज्जगादि**–खाद्यकादि । आव० ८२२ ।
**खज्जगावणो**–खाद्यकापण कुल्लुरिकापण । आव० २७५ ।
**खज्जय**–खाद्यम् । उत्त० १५६ ।
**खज्जुरी**–वलयविशेष । प्रज्ञा० ३३ ।
**खज्जूरे**–खर्जूर–पिण्डखर्जूरादि । उत्त० ६५४ ।
**खज्जूरपाणगं**–पानकभेद । आचा० ३४७ ।
**खज्जूरसारए**–मूलदलखर्जूरसारनिष्पन्न आसव खर्जूर-

सार । प्रज्ञा० ३६४ ।
खज्जूरसारो–खर्जूरसार । जीवा० २६५ ।
खज्जूरि–वृक्षविशेष । भग० ८०३ ।
खज्जूरिवण–खर्जूरिवन–वृक्षविशेषवन । जीवा० १४५ ।
खज्जूरिसार–खर्जूरसारनिष्पन्न आसवविशेष । जं० प्र० १०० ।
खज्जोयग–खद्योतक–प्राणिविशेष । आचा० ५० ।
खञ्जरीट–जीवविशेष । दश० १४१ ।
खटिका–वर्त्ति । बृ० प्र० २५ आ ।
खट्ट–खट्वा । आव० ३५४ ।
खट्टमेहा–अम्लजलमेघा । जं०प्र० १६८ । भग० ३०६ ।
खट्टा–खट्वा–तूल्यादि । प्रश्न० ६२ ।
खट्टामल्लो–अतिशयेन वृद्ध । खट्टामल्लो नाम प्रबलजराजर्जरितदेहतया य खट्वाया उत्थातु न शक्नोति । बृ० द्वि० ५६ आ ।
खट्टिका–यम्मजुगितविसेसो । नि० चू० द्वि० ४३ आ ।
खट्टोदए–खट्टोदक–ईषदम्लपरिणामम । जीवा० २५ । प्रज्ञा० २८ ।
खड–तृणम् । व्य० प्र० १०७ अ ।
खडखडावेह–खादयत । आव० २०४ ।
खडखडेइ–खटत्कारयति । उत्त० १३८ ।
खडपूलग–तृणपूलक । नि० चू० तृ० १२८ अ ।
खडपूल्य–तृणपूलिका । मर० ।
खडहडी– । नि० चू० प्र० १६६ आ ।
खडुग–खड्डुग –टोलक । बृ० तृ० ६२ अ ।
खड्ड–गर्त्तम् । आव० ६२४ ।
खड्ड–बृहत्प्रमाण । विशे० १०३० । गर्त्त । आव० १६६, ३८४ ।
खड्डा–गर्त्ता । आव० ३६८, ६८५ ।
खड्डुग–अङ्गुलीयकविशेष । ओप० ५५ ।
खड्डुय–खड्डुग टक्कर । उत्त० ६२ ।
खणं–खण–स्तोककालम् । दश० १८० । क्षण –समय । आव० ६१० । पारणम् । आव० ३२५ । क्षण–अवसर । सूत्र० ७६ । परमनिरुद्ध काल क्षण । सूत्र० २५ । बहुतरोत्सवयामरूप । ज्ञाता० १०४ । क्षण– प्रस्ताव । उत्त० ६३१ । परमनिरुद्ध काल क्षण । अष्टप्रकारेण कर्म्मणा समारब्धनैर्वा विषयाभिष्वङ्गस्नेहादिभि । आचा० ११२ । क्षणन क्षणो–हिंसा । आचा० २११ । मुहूर्त्त । ठाणा० ३४५ । क्षण–अवसरम् । आचा० १०६ ।
खणजोइणो–परमनिरुद्ध काल क्षण, क्षणेन योग–सम्बन्ध क्षणयोग स विद्यते येषा ते क्षणयोगिन । सूत्र० २५ ।
खणण–खननम् । आव० ६१६ ।
खणभगविघायत्थं–क्षणभङ्गविघातार्थं–निरन्वयक्षणिकवस्तुवादविघातार्थम् । दश० १३० ।
खणयन्नो–क्षण एव क्षणक –अवसरो भिक्षार्थमुपसर्पणादिकस्त जानातीति । आचा० १३२ ।
खणलव–कालोपलक्षण क्षणलवादिषु सवेगभावनाध्यानासेवनतश्च निर्वर्त्तितवान् । ज्ञाता० १२२ ।
खणसखडी–क्षणसङ्खडी । दश० ८६ ।
खणाति–क्षणा सङ्ख्यातानप्राणलक्षण । ठाणा० ८७ ।
खणिए–क्षणिक निर्व्याघात । ओप० २०० ।
खणित्तु–खनित्वा–समाकृष्य । आचा० ४१७ ।
खणोक्रेंति–प्रक्षालयन्ती । आव० २१५ ।
खण्णा–(देशी०) सर्वात्मना लूषिता । व्य० प्र० १४० आ ।
खत–स्वदेहोद्भवमेव क्षतम् । अनु० २१२ ।
खतए–राहुप्रलापीमते कृष्णपुद्गलविशेष । राहो चतुर्थनाम । सूर्य० २८७ ।
खतोवसम–क्षयोपशम क्रियारूप एव । ठाणा० ३७८ ।
खत्त–क्षत्रम् । उत्त० २०७ । क्षत्र–करीषविशेष । पिण्ड० ८–१८ । ओप० १३० ।
खत्तए–खात –क्षात इत्यर्थ । खातक क्षेत्रयेनि गम्यते चौर इत्यर्थ । ज्ञाता० ७६ ।
खत्तखणग–खात्रखानका–ये सन्धानवर्जिभित्ती खानयन्ति । ज्ञाता० २३६ ।
खत्तखणण– । ज्ञाता० २३६ ।
खत्तमेहा–खात्रमेघा –करीषसमानरसजलोपेतमेघा । जं० प्र० १६८ । भग० ३०६ ।

**खत्ता**–क्षत्ता–क्षत्रीयस्त्रीशुद्राभ्यां जात । आचा० ८ । क्षत्ता–क्षत्रियजातयो वर्णसङ्करोत्पन्ना वा । तत्कर्म-नियुक्ता । उत्त० ३६३ ।

**खत्तिआ**–क्षत्रिया–श्रेष्ठपादय । दश० १६१ । क्षत्रिया । आव० १२८ । क्षणनानि क्षतानि तेभ्यस्त्रायत इति क्षत्रिय–राजा । उत्त० १८२ । राजा । भग० १०१ । राजकुलीन । भग० ११५ । इक्ष्वाकुवंशादिक । सूत्र० २३६ । कुलविशेष । आव० १७६ । राष्ट्रकूटादय । आचा० ३२७ । सामान्यराजकुलीन । औप० ५८ ।

**खत्तियकुंडग्गामं**–क्षत्रियकुण्डग्राम–सिद्धार्थराजधानी । आव० १७६ । नगरविशेष । भग० ४६१ ।

**खत्तिया**–सामान्यतो राजोपजीविन । बृ० द्वि० १५२ अ । क्षत्रिया –हैहेयाद्यन्वयजा । उत्त० ४१८ । चक्रवर्ति-वासुदेवबलदेवप्रभृतय । आचा० ३३३ । क्षत्रिया–सामान्य राजकुलीना । राय० १२१ । क्षत्रिया–दोष-प्रवृत्तितया विकल्पिता । ज० प्र० १४५ । क्षत्रिया–आरक्षिका । नि० चू० प्र० २७७ अ ।

**खत्थो**–विलक्ष । दशा० ५५ ।

**खदिरचञ्चु**–वञ्जुल । प्रश्न० १० ।

**खदिरसारए**–खदिरसार । प्रज्ञा० ३६० ।

**खद्ध**–त्वरितम् । आचा० ३३७ । बृहच्छब्देन खरकर्क-शनिष्ठुरम् । आव० ७२६ । बहु । उत्त० १४६ । महाप्रमाणम् । बृ० द्वि० ६४ आ । प्रचुरम् । आव० ३६३, ५६ । बृ०प्र० २३५ अ । बृ० सू० २४८ आ । ओघ० ६८, १२७ । पिण्ड० ७०, १३६ । आव० ७२६ । प्रश्न० १२८ । आचा० ३३६ । प्रचुरम् । व्य० प्र० १८० अ । प्रभूतम् । ओघ० ४८ । प्रश्न० १४१ । आचा० ३५३ । शीघ्रम् । आचा० ३५२ । बृहता बृहता कवलेन भक्षणम् । आव० ७२६ । बृहत्प्रमाण । ओघ० २१६, १२१ । ठाणा० १३८ ।

**खद्धपलालितो**–प्रचुरपलालित –सुखोधनाढ्य । उत्त० २२५ ।

**खद्धवसभो**–समर्थवृषभ । उत्त० ३०२ ।

**खद्धादाणिअगामो**–खद्धादानिकग्राम –समृद्धग्राम । ओघ० ४८ ।

**खद्धादाणिओ**–बहुदानीय –श्रीमान् । आव० ६३९ ।

**खद्धादाणिय**–प्रचुरादानीय –ऋद्धिमान् धनाढ्य । आव० ४३३ ।

**खद्धादाणियगिहा**–ईश्वरगृहा इत्यर्थ । नि० चू० प्र० २५० अ ।

**खनित्रम्**–खननसाधनम् । शस्त्रविशेष । आचा० ३९ ।

**खप्रा**–मत्स्यबन्धनविशेषा । जीवा० ३२१ ।

**खपुसधग्गुरि**–अदजघानिपाओ । नि० चू० द्वि० १८ अ ।

**खपुसा**–हिमाहिकण्टकादिरक्षार्थं पादत्राणम् । बृ० द्वि० १०१ अ । कुम्भकच्छाकार चर्मं । या घुट्टक गिरघाति सा खपुसा । बृ० द्वि० २२२ आ ।

**खमंत**–क्षपयन्, क्षपणम् । पिण्ड० १६९ ।

**खम**–क्षेम–सङ्गतत्वम् । । क्षम–युक्तार्थं । बृ० प्र० १०७ अ । क्षमा । भग० ४६६ ।

**खमइ**–क्रोधाभावात् क्षमते । भग० ४६८ ।

**खमए**–क्षपक । आव० २६३ । क्षपक –विकृष्टतपस्वी । बृ० प्र० २५१ आ ।

**खमओ**–क्षपक –श्रमण । दशा० ३७ । एकान्तरितादि-क्षपणकर्ता । बृ० द्वि० ६४ आ ।

**खमग**–क्षपक–मासक्षपणादिकम् । ओघ० ६४ । अनशनी भक्त० । उपाधिना । बृ० प्र० २४८ आ । नि० चू० द्वि० ५५ अ । क्षपक । आव० १६५ ।

**खमण**–उपवास । बृ० द्वि० ६४ आ । क्षपण–अभक्तार्थं । व्य० प्र० १६१ आ ।

**खमणाइयं**–क्षपणादि–अनशनतादि । आव० ८४० ।

**खमया**–क्षमा–क्रोधनिग्रह । चतुर्दशोऽनगारगुण । आव० ६६० ।

**खमसि**–क्षमसे क्षोभाभावेन । ज्ञाता० ७९ ।

**खमा**–क्षमा–अनभिव्यक्तक्रोधमानस्वरूपस्य द्वेषमन्निश्रस्याप्रीतिमात्रस्याभाव, अथवा क्रोधमानयोरुदयनिरोध । सम० ४६ । सङ्गतत्वम् । औप० ५९ । रोमावगमो । नि० चू० प्र० २१६ अ । क्षमत्वम् । भग० ४५६ ।

**खमामि**–आत्मनि परे वाऽविकोपतया क्षमे । ठाणा० २४७ ।

**खमावणय**–परस्यासन्तोषवत क्षमोत्पादनम् । भग० ७२७ ।

**खमाह**-क्षमस्व, महस्व । उत्त० ३६७ ।
**खमिय**-क्षपिक । बृ० द्वि० २०५ अ ।
**खय**-क्षय राजयक्ष्मा । बृ० प्र० १७० अ । सर्वविनाश । भ० ५३६ ।
**खयवका**-कीलक । उत्त० ८५ ।
**खयविक्कयाण**- । नि० चू० तृ० ३७ आ ।
**खर**-कठिनम् । जीवा० ८९ । उच्चेण महतेण सरेण ज सरीस उक्त त खर । नि० चू० प्र० २६६ अ । खरस्थानम् । अनु० १३३ । सरोसवयणमिव अकत खर । नि० चू० प्र० २७८ अ ।
**खरट**-खरण्टयति-लेपवन्त करोति यत् तत् खरण्ट अशु च्यादि । ठाणा० २४४ ।
**खरटणा**-खिसना । ओघ० ४५ । णिप्पिवासा । नि० चू० द्वि० १३१ अ । प्रवचनोपदेशपूर्वक परुषभणनम् । ओघ० ४२ । खरटन-निर्भत्सनम् । व्य० प्र० १२० आ ।
**खरटना**-निर्भर्त्सना । बृ० प्र० १५० आ ।
**खरटि**-खरण्टनम्, लेपविशेष । पिण्ड० ८७ ।
**खरटिओ**-तिरस्कृत । उत्त० १३६ ।
**खरटिता**-खउरिता रोसेणेत्यर्थ । रुट्ट । नि० चू० प्र० २०७ अ ।
**खरटेउ**-निर्भर्त्स्य । बृ० प्र० ३१ आ ।
**खरटेति**-भर्त्सयति । नि० चू० प्र० २११ आ ।
**खरटेंहिंति**-निभर्त्सयिष्यन्ति । दश० ३८ ।
**खरटो** उ जो मलो त मखउ भण्णति । नि० चू० प्र० १६० आ ।
**खरडिय**-सतर्ज्य, निर्भर्त्स्य । आव० ४३१ ।
**खर**-खरस्थानम् । ठाणा० ३६७ । तिलम् । आव० ८५४ । गर्दभ । प्रज्ञा० २५२ । जीवा० २८२ । दास । बृ० द्वि० १६७ अ । खरसज्ञय । ओघ० १४६ ।
**खरइ**-क्षरति-सशब्दयति । विशे० २५५ ।
**खरउ**-सातवाहनस्यामात्य । व्य० प्र० १६३ अ ।
**खरए**-राह्वाप्रलापीमते कृष्णपुद्गलविशेषा । सूर्य० २८७ । राहो चतुर्थनाम । भग० ५७५ । राहो तृतीय नाम । सूर्य० २८७ । दासदासीरूप द्वयक्षरकम् । बृ० द्वि० १६४ आ ।

**खरओ**-द्वयक्षरो वा कमकर । ओघ० १५६ । दास बृ० तृ० २२५ अ ।
**खरकट**-खरा-निरन्तरा निष्ठुरा वा कण्टा-कण्टका यस्मिंस्तत् खरकण्ट बब्बूलादिडालम् । ठाणा० २४४ ।
**खरकटयसमाणे**-यस्तु प्रज्ञाप्यमानो न केवल स्वाग्रहान्न चलति अपितु प्रज्ञापक दुर्वचनकण्टकैर्विध्यति स खर कण्टकसमान । ठाणा० २४३ ।
**खरकडे**-खरकाण्डम् । कठिनो विशिष्टो भूभाग । जीवा० ८९ ।
**खरकम्मिअ**-दण्डपाशग । ओघ० ८६ ।
**खरकम्मिए**-खरकर्मिक -आरोग्याभिरतो बीजपूरवभट्ट प्रान्ते कुम्भकाराद्यन्यतम । आव० ४५३ ।
**खरकम्मिओ**-खरकर्मिक -आरक्षक । बृ० तृ० १०२आ ।
**खरकम्मिय**-खरकर्मिक । आव० ६२७ ।
**खरकम्मिया**-सनद्धपरिकरा । बृ० द्वि० १२६ अ । रायपुरिसा । नि० चू० प्र० २१० अ । राजपुरुषा । बृ० द्वि० २१३ आ ।
**खरकर**-श्लक्ष्णपाषाणमृतचर्मकोशकविशेष, स्फुटितवशो वा । प्रश्न० ५६ ।
**खरग**-खरक -वैद्यविशेष । आव० २२६ । दास । नि० चू० द्वि० १०५ आ ।
**खरडिए**- । ठाणा० ३८६ ।
**खरण**-बब्बूलादिडालम् । ठाणा० २४४ ।
**खरदूषण** -रावणभगिनीपति । प्रश्न० ८७ ।
**खरपम्ह**-खरा णिराहुडा वासाओ जस्स त खरपम्ह । नि० चू० प्र० २४५ आ ।
**खरपिड**-कठिनपिण्ड । आचा० ३६१ ।
**खरफरुस**-खरपरुष अतिकर्कश । आव० ६१७ । ज्ञाता० ७९ । स्पर्शतोऽतीवकठोर । भग० ३०८ ।
**खरबायरपुढवी**-खरबादरपृथिवी-मण्यादिषट्त्रिंशद्भेदा-त्मिको पृथिवी । आचा० २८ ।
**खरबादरपुढविक्काइया**-खरा नाम पृथिवी सघातविशेष काठिन्यविशेष वाऽऽपन्ना तदात्मका जीवा अपि खराश्च ते बादरपृथिवीकायिकाश्च, खरा चासौ बादरपृथिवी च स काया -शरीर येषा ते एव खरबादरपृथिवीकायिका ।

जीवा० २२ ।
खरमुखी–काहला, नस्स मुहत्थाणं खरमुहाकार कट्ठमय–मुह कज्जति । नि० चू० तृ० ६२ अ ।
खरमुहि–खरमुखी काहला । भग० ४४७, २१६ । जं० प्र० १०१ ।
खरमुही–काहला । जोवा० २४५ । तोहाडिका । आचा० ४१२ । खरम्खी–काहला । औप० ७३ । जीवा० २६६ । खरमुही–काहला । जं० प्र० १६२ । राय० २५ ।
खरवायं–खरवातम् । आव० २१७ ।
खरशानया–पाषाणप्रतिमावत् । ठाणा० २३२ ।
खरस्सरे–यो वज्रकण्टकाकुल शाल्मलीवृक्ष नारकमारोप्य खरस्वर कुर्वन्त कुर्वन् वा कर्षति स खरस्वर । चतुर्दश परमाधार्मिक । सम० २९ । खरस्वर–नरके चतुर्दश परमाधार्मिक । आव० ६५० । चतुर्दश परमाधार्मिक । उत्त० ६१४ । सूत्र० १२४ ।
खरा–कठिना । उत्त० ६८९ । सङ्घातविशेष काठिन्य-विशेष वाऽऽपन्ना पृथिवी । जीवा० २२ । निरन्तरा निष्ठुरा वा । ठाणा० २४३ ।
खरावत्ते–खरो–निष्ठुरोऽतिवेगितया पातकश्छेदको वा आवत्तनमावर्त्तः स च समुद्रादेश्चक्रविशेषाणां वेति खरावर्त्तः । ठाणा० २८८ ।
खरि–दुवक्खरिया । नि० चू० तृ० २० अ ।
खरिए–द्व्यक्षरिका । ओघ० २२३ ।
खरिका–कठोरकर्मा । उत्त० १०७ ।
खरिमुह–खरमुखी–नपुंसकी दासी वा । व्य० द्वि० १५० अ ।
खरियत्ताए–नगरबहिर्वर्त्ति वेश्यालेन । भग० ६६४ ।
खरिया–द्व्यक्षरिका दासी । बृ० द्वि० ४७ आ । द्व्यक्षरिका । ओघ० ५६ । द्व्यक्षरिका–कर्मकारी । ओघ० १५६ । दासी । नि० चू० द्वि० ३९ आ ।
खरेणं– । आव० ६४ ।
खरोट्टी–लिपिविशेष । प्रज्ञा० ५६ ।
खज्जुं–वण्ड्म् । ठाणा० ५०५ ।
खर्व्व–स एव उन्नतो जात्यादिना भावेनात्मोत्कादिरिति । ठाणा० १८२ ।
खलं–कुथितादि विशिष्टम्, अल्पधान्यादि वा । सूत्र० ३२४ । खल–धान्यमेलनपचनादिस्थण्डिलम् । जं० प्र० १४९ । धान्यमेलनादिस्थण्डिलम् । ज्ञाता० १०८ ।
खलखलंति–खटत्खटदिति भवन्ति, खलखलशब्दं कुर्वन्ति । आव० ७१९ ।
खलखलिति–खलखलशब्द करोति । उत्त० ३०३ ।
खलखिलं–निर्जीवमिन्धनं । व्य० द्वि० १६६ आ ।
खलगं–जस्य मस सोमति । नि० चू० द्वि० २२ आ ।
खलणा–स्खलना–प्रतिसेवणा, भङ्गो, विराधना, उपधात अबोधि, शबलीकरण, मइलणा च । ओघ० २२५ ।
खलतिना– । ठाणा० ४१३ ।
खलपुरिसो–खलपुरुष । राजपुरुषविशेष । आव० ८२१ ।
खलमत्स्य–मत्स्यविशेष । प्रश्न० ६ ।
खलयं–खलक–धान्यमेलनस्थण्डिलम् । ज्ञाता० ११६ ।
खलयारिओ–स्खलीकृत । आव० २९४ ।
खलहाणाणि– । नि० चू० प्र० ३४४ आ ।
खलाहि–(देशी) अपसर । उत्त० ३५९ ।
खलिणं–कायोत्सर्गस्य एकोनविंशतौ दोषे त्रयोदशमदोष । आव० ७९८ । अस्सरस्सी । दश० चू० १५४ । खलिन–कविकम् । आव० २६१ । खलिन–कविक । ज्ञाता० २२० ।
खलिय–स्खलित–छलितम् । ओघ० २२५ । विनष्टम् । बृ० तृ० १०२ आ ।
खलियाइ–स्खलितादि । भग० ८६१ ।
खलीकओ उपसर्गित । दश० ३७ ।
खलीकुर्वन्ति– । ओघ० ४५ ।
खलीण–विषमभूमि । आव० ५६ । खलिन–कविकम् । दश० २८३ ।
खलीणा–खलीना–आकाशस्था । विपा० ४४ ।
खलुंक–गलिरविनीत इति । ठाणा० २५० । दुर्विनय । उत्त० ५४८, ५५३ ।
खलुंकिज्जं–खलुङ्कीय, उत्तराध्ययनेषु सप्तविंशतितममध्ययनम् । उत्त० ९ । सम० ६४ ।
खलुंकीयं–उत्तराध्ययनस्य सप्तविंशतितममध्ययनम् । उत्त० ५४८ ।

**खलु**–विशेषणे विशेषेण–अत्यर्थम्। आचा० १०५। खलु–निश्चितम्। सूर्य० १४। अपिशब्दार्थे। आव० ५३०।

**खलुए**–गले। नि० चू० प्र० १३८ अ। पादमणिबन्ध। विपा० ७२।

**खलुका**–जानुकादिसधय जानुकादिसन्धिषु वात। बृ० द्वि० १२३ आ।

**खलुखेत्त**–खलुक्षेत्र–यत्र किमपि प्रायोग्य लभ्यते। व्य० द्वि० ३३५ आ।

**खलुखेत्ता**–खलुक्षेत्राणि–यत्राल्पो लोको भिक्षा प्रदाता। बृ० प्र० २०६ आ।

**खलुग**–खलुक–घुण्टक। बृ० द्वि० २२३ अ। चरण गुल्फ। बृ० द्वि० २५२ अ।

**खलुगमेत्तो**–कद्दमो। नि० चू० द्वि० ७१ आ।

**खल्लेज**–स्खलयेयु–निष्काशययु। उत्त० ३६४।

**खल्लए**–रूपकविशेष। ज्ञाता० २३५।

**खल्लका**–पत्रपुटानि। बृ० द्वि ६४ अ।

**खल्लकादि**–चमकोश पार्ष्णित्राणम्। आचा० ३७०।

**खल्लग**–खल्लक चर्मपञ्चके द्वितीयो भेद। आव० ६५२। खल्लक। ठाणा० २३४।

**खल्लगादिपुडगे**– । नि० चू० द्वि० १८ अ।

**खल्लाडो**–खल्वाट। आव० ३१७।

**खल्लिता**–खल्लपो। दश० ८६।

**खल्ली**–खनति। उत्त० १६५। खल्वाट। विशे० ६७२।

**खल्लीडो**–खल्वाट। उत्त० १६५।

**खल्लूट**–साधारणवनस्पतिकायिकभेद। जीवा० २७।

**खल्लूर**–साधारणबादरवनस्पतिकायविशेष। प्रज्ञा० ३४।

**खवए**–क्षपक। मासक्षपणादितपस्तप्यते। बृ० तृ० ३५ आ। मासादिक्षपक। बृ० तृ० ३५ आ।

**खवगा**–क्षपका–उपवासिका। ओघ० ६४।

**खवण**–क्षपण–प्रकृत्य तरसक्रमितस्य क्षपण प्रदेशोदयेन निर्जरणम्। विशे० १००६। अप्रत्याख्यानादिप्रक्रमण क्षपकश्रेण्यां मोहाद्यभावापादनम्। आचा० २६८।

**खवणा**–क्षपणा–पापानां कर्मणा क्षपणहेतुत्वात् क्षपणेति। ठाणा० ६। क्षपणा श्रुतनाम। दश० १६।

**खवणो**–चउप्पगार भव खवेमाणो। जम्हा अप्पा कम्म खवइ तम्हा वा। दश० चू० १४५।

**खवलिओ**–आमन्त्रित। आव० १७५।

**खवल्लमच्छ**–मत्स्यविशेष। जीवा० ३६। प्रज्ञा० ४३।

**खविउण**–क्षपयित्वा। पिण्ड० १६७।

**खवियदद्रा**–क्षीणक्लेशा। चउ०।

**खवुस**– । नि० चू० प्र० १३६ आ।

**खस**–खस–चिलातदेशनिवासी म्लेच्छविशेष। प्रश्न० १४।

**खसखसा**–प्रक्षाल्यमानकुण्डलिकादे शब्दविशेष। ओघ० १६७।

**खसद्दुमो** नाम मियराया। व्य० प्र० २२३ आ।

**खसर**–खर्जू। जीवा० २८४।

**खसर**–खशर–कशर। भग० ३०८। कसर। ज० प्र० १७०।

**खसा**–म्लेच्छविशेष। प्रज्ञा० ५५।

**खसूचो**–मूर्ख। सूत्र० २३७।

**खह**–आकाशम्। ठाणा० ११५। उत्त० ६६८।

**खहयर**–खचरज–पुद्गलविशेष। आव० ८५४। खचरा–वैताढ्यवासिनो विद्याधरा। ज० प्र०१६८। खे–आकाशे चरन्तीति खचरा। प्रज्ञा० ४३।

**खहयरगब्भवक्कतिया**– । भग० ३२६।

**खहे**–खनन भुवो हाने च स्याग यद्भवति तत् खहम्। भग० ७७६।

**खाइ**–अवश्यम्। आव० ४०१।

**खाइ**–क्षयय। उत्त० ६८, १७४। गच्छ अवश्य वा। आव० २२०। भग० १७०। सदा अत्यन्तम्। आव० ७०१। पुन। भग० ३६८।

**खाइज्जा**–खादत्–भापत्। दश० २३५।

**खाइण**–देशभाषया वाक्यालङ्कारे। औप० ११५।

**खाइम**–खाद्यत इति खाद–खर्जूरादि। दश० १४६। खादिम फलादी। ख–आकाश तच्चमुखविवरमेव तस्मिन् मातीति खादिमम्। आव० ८५०। खादिम–त्रपुषफलादि। आव० ८११। खादिम–पिण्डखर्जूरादि। उत्त० ४१८। खादन खादस्तेन निर्वृत्त खादनार्थ तस्य निर्वर्त्यमानत्वादिति खादिम। ठाणा० १०१। खादन

इति खादिम-नालिकेरादि । आचा० २६५ ।
**खाइयं**-खातवलयम् । प्रश्न० १६० ।
**खाई**-ख्याति अन्तर्भूतण्यर्थतया ख्यापयति-प्रकाशयति । प्रज्ञा० ६०० ।
**खाओदया**-खाताया भूमौ यान्युदकानि तानि खातोदकानि। भग० ६६४ ।
**खाडखडे**-नरकेन्द्रविशेष । ठाणा० ३६५ ।
**खाडहिला**-कृष्णशुक्लपट्टाङ्कितशरीरा शून्यदेवकुलादि वासिन्य । प्रश्न० ८ ।
**खाडहिल्ला**-खाडहिला । आव० ४१७ ।
**खाण**-खादनम् । आव० ११५ ।
**खाणगतेणो**-खत्त खणतो । नि० चू० द्वि ३८ आ ।
**खाणी**-खनि । आव० २७४ ।
**खाणु**-स्थाणव -कीलका ये छिन्नावशिष्टवनस्पतीना शुष्कावयवा 'ठुठा' इति लोकप्रसिद्धा । ज०प्र० ६६ । स्थाणु -ऊर्ध्वकाष्ठम् । ज० प्र० १२४ । दश० १६४ । स्थाणु । ज्ञाता० ६५, ७८, ७६ ।
**खाणुग**-उद्धायत्ति य कट्ठ खाणुग भण्णति । नि० चू० प्र० ६६ अ ।
**खाणू**-स्थाणु -कीलक । बृ० द्वि० ७७ आ । नि० चू० प्र० ३२ अ ।
**खात**-खात, उभयत्रापि सममिति । प्रज्ञा० ८६ । नदी० १६४ । भूमिगृहकादि । आव० ८२६ । उपरि विस्तीर्णमध सङ्कुचितम् । राय० २ ।
**खाति**- । भग० २२६ ।
**खातिका**-अध उपरि च समखातरूपा । अनु० १५६ ।
**खातिया**-खातिका-परिखा । प्रश्न० ८ । उपरि विस्तीर्णाऽध सङ्कुचखातरूपा । भग० २३८ ।
**खातोच्छ्रितम्**-भूमिगृहस्योपरि प्रासाद । आव० ८२६ ।
**खामिअविउसविआण**-क्षमितव्यवशमितानां - मर्षितत्वेनोपशान्तानाम् । सम० ३७ ।
**खामित**-क्षामितानि-वचसा मिथ्यादुष्कृतप्रदानेन क्षमितानि । बृ० तृ० २२१ अ ।
**खामिय**-मिथ्यादुष्कृतेन क्षमितम् । क्षामितव्यम् । बृ० तृ० २२२ अ ।
**खामेत्ता**-क्षमयित्वा । ज्ञाना० ७४ ।
**खायं**-खात-उपरि विस्तीर्णमध सङ्कुचम् । ज्ञाना० २ । औप० ३ । खातमध उपरि च समम् । सम० १३७ । कूपादि । अनु० १५४ । ख्यात-प्रसिद्धम् । आव०५१४ । खात-उभयत्रापि समम् । जीवा० १५६ । ज० प्र० २८ अ । ज० प्र० ७६ । खातानि-पुष्करिण्यादिकानि । ज० प्र० २१० ।
**खायजसो**-ख्यातयशा । आव० ६१७ ।
**खायजाणए**-ख्यातज्ञायक । आव० ४२४ ।
**खार**-कटुकम् । प्रज्ञा० ३६५ । क्षार-तिलक्षारादि । प्रश्न० ५७ । तीक्ष्णम् । जीवा० ३०३ । क्षार -परस्पर मत्सर । ज० प्र० १२५ । करीरादिप्रभव । दश० १३६ । परस्परमत्सर । भग० १६८ । क्षार -भुजपरिसर्प तिर्यग्योनिक । जीवा० ४० । परस्पर-मात्सर्यम् । जीवा० २८३ । वस्तुलादिलंवण वा । बृ० द्वि० २७१ अ । यवक्षारादि । पिण्ड० ८ । वत्थुलमादी खारो । नि० चू० प्र० १६२ आ । वत्थुलादिणो । नि० चू० प्र० ३५६ अ । क्षारा -क्षाररसमासोरुप्रभृतय । व्य० प्र० ६१ आ । क्षार -तिलक्षारादि । औप० १३० । क्षारो-भस्मादि । ठाणा० ४६२ ।
**खारकडुय**-क्षारकटुकम् । आव० ८८६ ।
**खारकाइए**-क्षारकायिकी । आव० २१७ ।
**खारगंधो**-क्षारगन्ध -कटुकगन्ध विपगन्ध । आव०७२३ ।
**खारतंते**-क्षरण क्षार, शुक्रम्य तद्विषय तन्त्र यत्र तत् क्षारतन्त्रम् । ठाणा० ४२७ ।
**खारतउसी**-क्षारत्रपुषी कटुका त्रपुषी । प्रज्ञा० ३६४ ।
**खारतउसीफल**-कटुकात्रपुषी क्षारत्रपुषी तस्याएव फल क्षारत्रपुषीफलम् । प्रज्ञा० ३६४ ।
**खारमेहा**-क्षारमेघा सजादिक्षारसमानरसजलोपेतमेघा । भग० ३०६ ।
**खारवावी**-क्षारवापी-क्षारद्रव्यभृतवापी । प्रश्न० २० ।
**खारातणा**-मण्डगोत्रविशेष । ठाणा० ३६० ।
**खारिअ**-सलवणानि । औप० ६८ ।
**खारिया**-क्षारितानि यानि लवणरसण्टितानि शालनकान्यास्तानानीत्यर्थ । व्य० द्वि० १४२ अ ।

खारोदए-क्षीरोदक-ईषल्लवणपरिणामम् । जीवा० २५१ । क्षारोदक-ईषल्लवणस्वभावम् । प्रज्ञा० २८ ।
खालु- । ओघ० २०६ ।
खासिअं-कासन-कासितम् । विशे० २७४ ।
खासिए-कासितम् । आव० ७७६ ।
खासिय-म्लेच्छविशेष । प्रज्ञा० ५५ । खासिक-चिलातदेशनिवासी म्लेच्छविशेष । प्रश्न० १४ ।
खिखिएइ-खिङ्खिङ्करोति । उत्त० १२१ ।
खिखिणि-किङ्किण्य-क्षुद्रघण्टिका । जं० प्र० १०६ । किङ्किणी-क्षुद्रघण्टिका । प्रश्न० १५६ । जीवा० १८१ । ज्ञाता० १६७ । क्षुद्रघण्टा । जीवा० १६२ ।
खिखिणिघंटाजालं-किङ्किणीघण्टाजालं-क्षुद्रघण्टासमूह । जीवा० ३६६ ।
खिखिणिजालेण-किङ्किणीजालेण क्षुद्रघण्टिका एकैकेन घण्टाजालन । जीवा० १८१ ।
खिखिणियाइ- । ज्ञाता० १३४ ।
खिखिणिस्सरे-किङ्किणि-क्षुद्रघण्टिका तस्या स्वरो ध्वनि किङ्किणिस्वर । ठाणा० ४७१ ।
खिखिणी-किङ्किणी-भूषणविधिविशेष । जीवा० २६६ । क्षुद्रघण्टा । जीवा० २०५ । क्षुद्रघण्टिका । जं० प्र० २३ । ठाणा० ४७२ ।
खिखिणीजाल-किङ्किणीजाल-क्षुद्रघण्टासघात । जीवा० २०५ ।
खिसं-परोक्षे हीलना खिसा । आव० ५२८ ।
खिसण-खिसन-निन्दावचन, असौ नोऽस्माविरयादिवचनम् । प्रश्न० १६० । मूयया असूयया वा असकृद्दुष्टाभिधान खिसनम् । दश० २५४ । जनसमक्ष निन्दा । भग० २२७ ।
खिसणा-खिसना-तान्येव लोकसमक्षम् । औप० १०३ । परिभव । ओघ० २१५ । पुणोरदुघणियस्स भवइ यथा उ वाहो उ वा हवेज्जा । दश० चू० १४० । लोकसमक्षमेव जात्याद्युद्घट्टनम् । अन्त० १८ ।
खिसणिज्ज-खिसनीयो जनमध्ये । ज्ञाता० ९६ ।
खिसंति-परस्परस्याग्रत तद्दोषकीर्तनेन । ज्ञाता० १४६ ।
खिसांत-सरप्टयति । बृ० द्वि० ९८ आ । निन्दति । नि० चू० द्वि० १०६ अ । आव० ७६६ । स्वसमक्ष वचनै कुत्सन्ति । भग० १६६ ।
खिसह-खिसत, जनसमक्ष निन्दत । भग० २१६ ।
खिसा-जुगुप्सा असमीक्षितभाषिणम् । ओघ० ५३ ।
खिसिज्जमाणो-निन्द्यमान । आव० ८६३ ।
खिसितं-जन्मकर्माद्युद्घट्टनत । ठाणा० ३७१ ।
खिसितवयणे-जन्मकर्माद्युद्घट्टनवचनम् । ठाणा० ३७० ।
खिसिय-खिसित-निन्दापुरस्सर शिक्षित । व्य० प्र० १६६ आ ।
खिइ-क्षितय-धर्माद्या ईषत्प्राग्भारावसाना अष्टौ भूमय । आव० ६०० ।
खिइपइट्ठिअं-क्षितिप्रतिष्ठित नगरविशेष । आव० ११६ ।
खिइपइट्ठितं-जितशत्रुराजधानी । नि० चू० तृ० ९८ आ ।
खिइपइट्ठिय-क्षितिप्रतिष्ठित, द्रव्यव्युत्सर्गोदाहरणे प्रसन्नचन्द्रराजधानी । आव० ४८७ । आत्मसंयमविराधनादृष्टान्ते जितशत्रुनगरम् । आव० ७३२ । नगरविशेष । उत्त० ३६५ । आव० ३७० । मगधाया मूलराजधानी । उत्त० १०५ । द्रव्यव्युत्सर्गे नगरम् । आव० ७२० ।
खिइपतिट्ठियं-क्षतिप्रतिष्ठित-नगरविशेष । उत्त० ३०४ । आव० ३८८ ।
खिइपदिट्ठिअं-क्षतिप्रतिष्ठित-नगरविशेष । आव० ११५ ।
खिज्जणिया-खेदक्रिया । ज्ञाता० २०५ ।
खिज्जिओ-खिन्न-रुष्ट । आव० ६७३ ।
खिण्ण-श्रान्त । नि० चू० द्वि० ६६ अ ।
खिति-क्षिति-क्षितिप्रतिष्ठित, योगसग्रहे शिक्षादृष्टान्ते नगरम् । अपरनाम चणकपुर वृषभपुर राजग्रह च । आव० ६७० ।
खितिखाणतो-उडुमादी । नि० चू० द्वि० ४४ आ ।
खितिपतिट्ठिय-जितशत्रुराजधानी । नि० चू० प्र० १५१ आ ।
खित्त-क्षेत्र-आकाशम् । अनु० १८१ । क्षिप्तं-व्याप्तम् । राय० २८ । क्षियन्ति निवसन्ति तस्मिन्निति क्षेत्र-आकाशम् । उत्त० ६४५ । क्षेत्र-सस्योत्पत्तिभूमि । आव० ८२६ । क्षेत्र-यदावद्भूखण्ड सूर्य स्वतेजसा व्याप्नोति तत् । जं० प्र० ४५६ । इन्द्रकीलादिवर्जित ग्रामनग-

रादि । बृ० प्र० ३६ अ । क्षियन्ति-निवसन्त्यस्मिन्निति क्षेत्र-ग्रामारामादि सेतुकेतुभयात्मकं वा । उत्त० १८८ ।

**खित्तचित्त**-क्षिप्तचित्त-पुत्रशोकादिना नष्टचित्त । ठाणा० ३०५ । शोकेन । ठाणा० ३१५ ।

**खित्तचित्ता**-क्षिप्त-नष्ट रागभयापमानैश्चित्त यस्या सा क्षिप्तचित्ता । बृ० तृ० २३० आ । अपमानतया क्षिप्त-नष्ट चित्त यस्या सा क्षिप्तचित्ता । बृ० द्वि० २१० अ । अपमानितोन्मत्ता । बृ० द्वि० २१० अ ।

**खित्तवत्थुपमाणाइक्कमे**-क्षेत्र-शस्योत्पत्तिभूमि, वास्तु अगार, क्षेत्रवास्तुना प्रमाणातिक्रम क्षेत्रवस्तुप्रमाणातिक्रम । आव० ८२५ ।

**खिद्यमानार्थतया** प्रयोजनम् । आचा० १०६ ।

**खिन्नो**-खिन्न विषण्ण । प्रश्न० ६२ ।

**खिप्पंतो**-क्षिप्यन्-प्रतीक्षमाण । दश० ५७ ।

**खिप्पामेव**-शीघ्रमेव । ज्ञाता० ३२ ।

**खिलप्रदेशे**-　　। विशे० ४३७ ।

**खिलभूमी**-खिलभूमि, हलैरकृष्टा भूमि । प्रश्न० ३६ ।

**खिलोभूय**-खिलीभूत-अनुभूतिव्यतिरिक्तोपायान्तरण क्षपयितुमशक्य निकाचितमित्यर्थ । भग० २५१ ।

**खिल्लणय**-　　। निरय० ३४ ।

**खिल्लर**-पल्वलम् । आव० ५६ ।

**खिल्लरबंधे**-　। नि० चू० प्र० २२१ अ । गोष्पदे । नि० चू० तृ० १८ अ ।

**खिल्लिउ**-क्रीडितम् । आव० ५६६ ।

**खियाहि**-　　। आचा० ३७८ ।

**खिवेमाणे**-क्षेपयन्-प्रेरयन् । ज्ञाता० ८५ ।

**खीणकसातो**-क्षीणकषाय । उत्त० २४७ ।

**खीणभोगी**-भोगो जीवस्य यत्रास्ति तद्भोगी-शरीर तत्क्षीणतपोरोगादिभिर्यस्य स क्षीणभोगी-क्षीणतनुर्दुर्बल । भग० ३११ ।

**खीणमोह**-क्षीणमोह क्षीणमोहनीयकर्म्म । ठाणा० १७८ । क्षीणमोह-श्रेणिपरिसमाप्तावन्तर्मुहूर्त्त यावत्क्षीणवीतराग । भूतग्रामस्य द्वादश गुणस्थानम् । आव० ६५० ।

**खीणे**-क्षीण वालाग्राकर्षणात्क्षयमुपगत । भग० २७७ । ज०प्र० ६६ । क्षीण-न सावशेषसद्भावे । भग० १७६ ।

**खीरं**-क्षीरम् । प्रज्ञा० ३६१ ।

**खीर**-क्षीरोद-क्षीरवरद्वीपानन्तर समुद्र । प्रज्ञा० ३०७ ।

**खीरकाओली**-साधारणबादरवनस्पतिकायविशेष । प्रज्ञा० ३४ ।

**खीरकाकोलि**-वल्लीविशेष । भग० ८०४ ।

**खीरगहण**-क्षीरग्रहणद्वारम् । ओघ० ४७ ।

**खीरघरं**-क्षीरशाला । नि० चू० प्र० २७२ आ ।

**खीरणि**-एगमस्थिक फलविशेष । भग० ८०३ ।

**खीरदुमा**-वडउम्बरपिप्पला । नि० चू० प्र० ३६ अ । क्षीरद्रुमा, उदुम्बरादय । ओघ० १२६ ।

**खीरद्दुमो**-क्षीरद्रुम, वटाश्वत्थादि । पिण्ड० ८ ।

**खीरधाती**-धात्रीविशेषा । नि० चू० द्वि० ६३ आ । स्तन्यदायिनी । ज्ञाता० ४१ ।

**खीरपूरए**-क्षीरपूर-क्वथ्यमानमग्निनाधाद्दूर्ध्वं गच्छत्क्षीरम् । प्रज्ञा० ३६१ ।

**खीरपूरेइ**-क्षीरपूर-क्वथ्यमानमग्निनाधाद्दूर्ध्वं गच्छत्क्षीरम् । ज० प्र० ३८ ।

**खीरप्पभो**-क्षीरप्रभ क्षीरवरद्वीपाधिपतिर्देव । जीवा० ३५३ ।

**खीरभुस**-वनस्पतिविशेष । भग० ८०२ । तृणविशेष । प्रज्ञा० ३३ ।

**खीरमहु**-क्षीरमध्वाश्रवलब्धि । विशे० ३८५ ।

**खीरमेहे**-क्षीरमेघा नामतो महामेघ । ज०प्र० १७४ ।

**खीरवरो**-क्षीरवर-द्वीपविशेष । जीवा० ३५२, ३८३ । प्रज्ञा० ३०७ ।

**खीरवुट्ठी**-क्षीरवृष्टि । भग० १९९ ।

**खीराइया**-क्षीरकिता-सञ्जातक्षीरका । ज्ञाता० ११६ ।

**खीरामलएणं**-अबद्धास्थिक क्षीरमिव मधुर यदामलक तस्मादन्यत्र । उत्त० २ ।

**खीरासव**-क्षरन्ति ये ते क्षीराश्रवा क्षीरवन्मधुरत्वेन श्रोतॄणां कर्णमन सुखकर वचनमाश्रवन्ति । ओप० २८ । क्षीरमिव मधुर वचनमाश्रवन्ति ये ते क्षीराश्रवा, लब्धिविशेषवन्त । प्रश्न० १०५ ।

**खीरिज्ज**-क्षीरिण्य-गाव यत्र दुह्यन्ते । आचा० ३३५ ।

**खीरिणि**–क्षीरणी–एकास्थिकवृक्षविशेष । प्रज्ञा० ३१ ।
**खीरो**–क्षीर क्षीरवरद्वीपाधिपतिर्देव । जीवा० ३५३ ।
**खीरोए**–क्षीरमिवोदक यस्य स, क्षीरवन्निर्मलस्वभावयो सुरयो मन्वन्धि उदक यत्रेति वा क्षीरोद । जीवा० ३५३ । समुद्रविशेष । जीवा० ३५३ ।
**खीरोद**–क्षीरोद, समुद्रविशेष । ज्ञाता० १२८ ।
**खीरोदए**–क्षीरसमुद्रे क्षीरोदकम् । प्रज्ञा० २८ । क्षीरोदक–क्षीरसमुद्रजलम् । जीवा० २५ ।
**खीरोदा**–क्षीरोदा, अन्तरनदी । ज० प्र० ३५७ ।
**खीरोयाओ**–नदीविशेष । ठाणा० ८० ।
**खील**– । व्य० द्वि० ३५८ अ । कीलक । आव० ५७८ । कील–शङ्कु । प्रश्न० ८ ।
**खीलए**–कीलक, लोहकीलक । दश० ५६ ।
**खीलग**–कीलक । आव० ४२० ।
**खीलगसठिते**–कीलकसस्थित सातीनखत्तस्स सठाण । सूर्य० १३० ।
**खीलगो**–कीलक । ओघ० १७८ ।
**खीलच्छाया**–छायाविशेष । सूर्य० ९५ ।
**खीलया**–कीलिका । आव० ३६० ।
**खीलसठितं**–ज उविज्ज त ण ठाति त खीलमठित । नि० चू० प्र० १२५ आ ।
**खीलसठिय**– । नि० चू० तृ० ५१ आ ।
**खुंखुणगा**–घुघुंरका–गुल्फा । आव० २०६ ।
**खुदंति**–आस्कन्दति प्राप्नोतीत्यर्थ । व्य० द्वि० १८७ आ । क्षोदयन्ति–विनाशयन्ति । उत्त० ६२८ ।
**खुभणं**–क्षोभणम् । प्रश्न० २४ ।
**खु**–खुर्वाक्यालङ्कारे अवधारणे वा । आचा० ८४ । अवधारणे । आव० ५३२ । निश्चित अवधारणे वा । उत्त० ३६९ । निश्चये । ज० प्र० २०१ । वाक्यालङ्कारे प्रश्न० १२० । क्षुत्–अष्टप्रकार कर्म । व्य० प्र०३६ आ ।
**खुई**–क्षुति छीत्कारादिशब्दविशेष । ज्ञाता० २२१ ।
**खुच्चक**– । व्य० प्र० २१८ आ ।
**खुज्जं**–यत्र शिरोग्रीव हस्तपादादिक च यथोक्तप्रमाणलक्षणोपेत उरउदरादि च मण्डल तत् कुब्जम्, पञ्चम सस्थानम् । जीवा० ४२ । कुब्जनरणी । वृ० प्र० ३१४ अ । कुब्ज–यत्र शिरोग्रीव हस्तपादादिक च यथोक्त प्रमाणलक्षणोपेत उरउदरादि च मडभ तत् । प्रज्ञा० ४१२ । कुब्ज–वक्र । ओघ० ७४, ८२ । वक्रशरीर । वृ० प्र० २४२ आ । सर्वगात्रमेगपार्श्वहीन कुब्जम् । नि० चू० द्वि० ४३ आ० । अधस्तनकायमडभ, इहाधस्तनकायशब्देन पादपाणिशिरोग्रीवमुच्यते, तद् यत्र शरीरलक्षणोक्तप्रमाणव्यभिचारि यत्पुन शेष तद्यथोक्तप्रमाण तत् कुब्जम् । ठाणा० ३५७ । कुब्ज–यत्र पाणिपादशिरोग्रीव समग्रलक्षणपरिपूर्णं शेष तु हृदयोदरपृष्ठलक्षण कोष्ठ लक्षणहीन तत् । अनु० १०२ । अधस्तनकायमडभ मस्थानम् । आव० ३३७ । कुब्ज–वक्रजङ्घ । प्रश्न० २५ । कुब्ज–ग्रीवादौ हस्तपादयोश्चतुरस्र लक्षणयुक्त सङ्क्षिप्तविकृतमध्यम् । भग० ६५० ।
**खुज्जत्त**–कुब्जत्व–वामनलक्षणम् । आचा० १२० ।
**खुज्जबोरी**–कुब्जबदरी । ओघ० १०० ।
**खुज्जसंठाण**–ग्रीवाहस्तपादाश्च समचतुरस्रा लक्षणयुक्ता यत्र सक्षिप्त विकृत च मध्ये कोष्ठ तत् कुब्जसस्थानम् । सम० १५० ।
**खुज्जा**–कुब्जा । आव० ६४ । नि० चू० प्र० २७७ अ । कुब्जा कुब्जिका–वक्रजङ्घा । ज० प्र० १९१ । ज्ञाता० ४१ ।
**खुज्जिय**–कुब्ज पृष्ठादावस्यास्तीति कुब्जी । आचा० २३३ ।
**खुट्टं**–त्रुटितम् । आव० १४९ ।
**खुट्टंति**–कुट्टयन्ति । उप० मा० गा० ४६६ ।
**खुट्टिमा**–गान्धारस्वरस्य द्वितीया मूर्च्छना । जीवा० १९३ ।
**खुट्टु**–रयणिपमाणातो ज आरतो त । नि० चू० प्र० २१६ आ ।
**खुड्डत**–कीडत । नि० चू० प्र० ११५ अ ।
**खुड्डु**–क्षुल्ल–लघु । जीवा० २०० । क्षुद्र बाल–शीलहीनो वा पार्श्वस्थादि । उत्त० ४७ । बालो । नि० चू० प्र० ६८ आ । क्षुल्ल । ओघ० १६० ।
**खुड्डइ**–त्रोटयति । भग० ६६८ ।
**खुड्डुए**–क्षुल्लक । आव० ११५ ।
**खुड्डुका**–भूषणविधिविशेष । जीवा० २६८ ।

खुड्डखुड्डगा–क्षुल्लक्षुल्लका–अतिलघव आयताश्च । ज० प्र० ४४ ।

खुड्ड(खुड)गं–मुद्रिका । आव० ४१८ ।

खुड्डग–मुद्रिका । आव० ६७१ । आव० ४१७ । क्षुल्लक–द्रव्यभावबाल । दश० १६५ । क्षुल्लक, क्षेत्ये दृष्टान्त । आव० ४०४ । क्षुल्लक लघु–बालक । उत्त० १०२ ।

खुड्डगकुमारो–क्षुल्लककुमार, योगसंग्रहे अलोभोदाहरणे कण्डरीकयुवराजपत्नीयशोभद्राया साध्व्यवस्थाया जातपुत्र । आव० ७०१ ।

खुड्डपगणी–क्षुल्लकगणी, क्षुल्लकाचार्य । व्य० प्र० २३७ आ ।

खुड्डत्ति–त्रोटयति । भग० ६६७ ।

खुड्डपाणा–क्षुद्रा–अधमा अनन्तरभवे सिद्धयभावात् प्राणाउच्छ्वासादिमन्त क्षुद्रप्राणा । ठाणा० २७३ ।

खुड्डय–क्षुद्रका–वयसा श्रुतेन वाऽव्यक्ता । सम० ३६ । क्षुद्दाग अङ्गुलीयकं । भग० ४५६ । क्षुल्लक । दश० ६१ । क्षुद्रक–अङ्गुलीयकविशेष । ज० प्र० १०५ । अङ्गुलीयकम् । ज्ञाता० २७ ।

खुड्डलए–स्वल्पकुटीरः । ओघ० ४६ । क्षुल्लक । आव० ३८८ । ओघ० १६० ।

खुड्डा–क्षुद्रा –अख्यातसरस्य । ज० प्र० ४० । लघव । जीवा० १६७ । क्षुल्ल । लघु–स्तोक च । जीवा० ४४२ । क्षुद्रा –अधमा । क्रूरा । ठाणा० ३६६ ।

खुड्डागभवग्गहण–क्षुल्लकभवग्रहण–षट्पञ्चाशदधिकावलिकाशतद्वयप्रमाण समयोनम् । जीवा० ४३४ ।

खुड्डागसव्वओभद्द–क्षुद्रिकासर्वतोभद्र, क्षुद्रिका–महत्पेक्षया सर्वत सर्वासु दिक्षु विदिक्षु च भद्रा–समसङ्ख्येति सर्वतो भद्रा तपोविशेष । अन्त० २९ ।

खुड्डाग सीहनिक्कीलिय–क्षुल्लक सिंहनिष्क्रीडित–वक्ष्यमाणमहदपेक्षया क्षुल्लक–ह्रस्व सिंहस्य निष्क्रीडित–विहृत गमनमिति, तपोविशेष । अन्त० २८ ।

खुड्डाग–क्षुल्लक–लघु । जीवा० १७७ । क्षुल्लक–ह्रस्व । प्रज्ञा० ५६६ । ज्ञाता० ११६ ।

खुड्डागनियंठ–क्षुल्लकनिर्ग्रन्थीयम्, उत्तराध्ययनेषु षष्ठमध्ययनम् । उत्त० २५५ ।

खुड्डागपयरेसु–क्षुल्लकप्रतरयो सर्वलघुप्रदेशप्रतरयो । भग० ६०७ ।

खुड्डागभवग्गहणं–क्षुल्ल लघु स्तोक च क्षुल्लमेव क्षुल्लकं एकायुष्कसवेदनकालो भवस्तस्य ग्रहण भवग्रहण क्षुल्लक च तद्भवग्रहण च क्षुल्लकभवग्रहणम् । जीवा० ४४२ ।

खुड्डागसीहनिक्कीलियं–क्षुल्लकसिंहनिष्क्रीडित वक्ष्यमाणमहासिंहनिष्क्रीडितापेक्षया क्षु-लक सिंहनिष्क्रीडित सिंहगमन तदिव यत्तपस्तत् । औप० ३० । ज्ञाता० १२२ ।

खुड्डियदुवारिया–क्षुद्रद्वारा –लघुद्वारा । आचा० ३२१ ।

खुड्डिया–मुद्रिका लघ्व्य । आचा० ३७० ।

खुड्डियाओ–क्षुल्लिका –लघव । जीवा० १६७ । अखातसरस्यस्ता एव लघ्व्य –क्षुल्लिका । ज० प्र० ४१ ।

खुड्डीय–क्षुल्लकी । नि० चू० प्र० १३२ आ ।

खुण्णं–विपण्ण । बृ० द्वि० २०५ आ ।

खुत्ति–श्रुत–तस्यैव सम्बन्धीन० तच्चिन्ह वा । ज्ञाता० ८५ ।

खुत्तग–मनाङ् मग्न केवल तत उत्तरीतुमशक्त । औप० ८७ ।

खुत्तो–निमग्न । प्रश्न० ६० ।

खुद्द–क्षुद्रकर्मकारित्वात् क्षुद्र । ज्ञाता० २३८ । क्षुद्र –द्रोहक अधमो वा । प्रश्न० ५ ।

खुद्दए–क्षुद्रक–विनाशयितु शक्यत इति क्षुद्र तदेवानुकम्प्यतया क्षुद्रक सोपक्रमम् । उत्त० ६२८ ।

खुद्दिमा–गान्धारग्रामस्य द्वितीया मूर्च्छा । ठाणा० ३९३ ।

खुद्दिया–क्षुद्रिका, जलाशयविशेष । प्रश्न० १६० ।

खुप्पिय–भूपतनात् प्रदेशान्तरेषु नमितानि । भग० ४६८ ।

खुप्पंते–कर्दम एव निमज्जति । ओघ० २९ ।

खुप्पति–सचिक्कणे जले मज्जति । नि० चू० द्वि० ७९ अ ।

खुप्पिज्ज–निमज्जन । ओघ० २९ ।

खुप्पिल–निमज्जक । त० ।

खुब्भंति–क्षुभ्यन्ति राज्यविलोडनाय सचलन्ति । व्य० द्वि० ३३ आ ।

खुभाएज्ज–क्षोभयेत् क्षुभ्येत् । भग० २६६ ।

खुभिज्जा–क्षोभ यायात्, प्रकुप्येत् । ओघ० ४० ।

